।। शिवाभ्यां नमः ।।

## ।। जम्बुनाथाष्टकम् ।।

कश्चन जगतां हेतुः कपर्दकन्दळितकुमुदजीवातुः।
जयति ज्ञानमहीन्दुर्जन्ममृतिक्लान्ति हर दयाबिन्दुः।। १

श्रितभृतिबद्धपताकः कलितोत्पलवन नवमदोद्रेकः।
अखिलाण्डमातुरेकः सुखयत्वस्मांस्तपः परीपाकः।। २

कश्चन कारुण्यझरः कमलाकुचकलशकषणनिशितशरः।
श्रीमान् दमितत्रिपुरः श्रितजम्बूपरिसरश्चकास्तु पुरः।। ३

शमितस्मरदवविसरश्शक्राद्याशास्यसेवनावसरः।
करिवनघनभाग्यभरो गिरतुमलं मम मनस्सरः शफरः।। ४

गृहिणीकृतवैकुण्ठं गेहितजम्बूमहीरुडुपकण्ठम्।
दिव्यं किमप्यकुण्ठं तेजःस्तादस्मदवनसोत्कण्ठम्।। ५

कृतशमनदर्पहरणं कृतकेतरफणितिचारिरथचरणम्।
शक्रादिश्रितचरणं शरणं जम्बूद्रुमान्तिकाभरणम्।। ६

करुणारसपारिधये करवाणि नमः प्रणम्रसुरविधये।
जगदानन्दधुनिधये जम्बूतरुमूलनिलय सन्निधये।। ७

कञ्चन शशिचूडालं कण्ठेकालं दयौघमुत्कूलम्।
श्रितजम्बूतरुमूलं शिक्षितकालं भजे जगन्मूलम्।। ८

।। इति श्री श्रीधरवेङ्कटेशार्य कृत जम्बुनाथाष्टकं सम्पूर्णम् ।।